॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## शिवकृत

# ॥ सीतास्तुतिः ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*

***Citrakūṭa Tulāsīpīṭhādhiśvara Jagadguru Rāmānandācārya Śrī Svāmī Rāmabhadrācārya***

महादेव उवाच

अहं हरिः पद्मभवस्तथान्ये देवा पदङ्घ्रिद्वितयं प्रपन्नाः ।
भवन्ति लोके महतामपीशास्तां रामरामां प्रणतोऽस्मि नित्यम् ॥ १ ॥

गुह्यं च ते नाम यदास्ति नित्यं गृह्णन्ति यद्वै सहजेति वेदाः ।
मातः स्फुटं तत्प्रतिपाद्यरूपां त्वां देवतां कामपि संश्रयामि ॥ २ ॥

वनं प्रमोदाख्यमनन्तकोटिश्रीजुष्टमानन्दमयं समंतात् ।
त्वद्वल्लभो यत्र च रामचन्द्रो विभाति कन्दर्पपरार्घ्यवेषः ॥ ३ ॥

भक्त्या प्रयुक्तं तदहं श्रयामि भूत्वा कदाचित् खलु कोऽपि गोपः ।
चिरं यदानन्दसमुद्रमग्नो ब्रह्माक्षरं वेद न किंचिदेतत् ॥ ४ ॥

तव स्वरूपं श्रुतिभिर्विमृग्यं ब्रह्मादिदेवैरपि नैव गम्यम् ।
अधिप्रमोदाटविकुञ्जवीथिष्वदो विसर्पत्यभितः पदाभ्याम् ॥ ५ ॥

शृङ्गारनामा रसराज उच्चैस्तवैव देहे कलिनप्रतिष्ठः ।
यदंशमात्रेण जगत्समस्तं विमोहित स्थावरजंगमाढ्यम् ॥ ६ ॥

लक्ष्मीः स्वयं या हरिसंगमेन प्रमोदयन्ती हृदयं विभाति ।
सा त्वत्कटाक्षामृतभूरिवर्षैः प्रभाविनीति ध्रुवमेव वेद्मि ॥ ७ ॥

विना त्वदङ्घ्रिप्रभवप्रभावं कुतो भवेद्दृद्धिरिति प्रतीतम् ।
यतस्त्वदाराधनवञ्चितानां भवोदधौ दुःखपरम्परैव ॥ ८ ॥

दिने-दिने यत्र तवोदयेच्छुः सखीसमूहो यतते त्वदीशम्।
वशे विधातुं बहुभावदूत्यैः स ते विलासो हृदये ममास्ताम्॥ ९॥

यथा पुमर्थाः पुरुषाय भोगा यच्छन्ति चत्वार उदीर्णरूपाः।
तथा स्वतन्त्रः खलु ते विलासः फलात्मकश्चैव फलार्पकश्च॥ १०॥

तवैव नित्यं वशवर्तिनी सा मायाभिधा शक्तिरनन्तरूपा।
यथाखिलं मोहितमेतदुच्चैर्जगत्स्वरूपं परतन्त्रमेव॥ ११॥

अचिन्त्यरूपा करुणा भवत्याः शक्ता समुद्धर्तुमुदेतिजीवान्।
नो चेत्कथं दुस्तरमोहजालं विभिद्य पारं परमं प्रयान्ति॥ १२॥

पितामहो यद्वितनोतिविश्वं रक्षन् हरिर्द्रावयते च दैत्यान्।
अहं तथा संहरणं करोमि तदेतदाभाति भवत्प्रसाद॥ १३॥

यतोऽभवद्वाङ्मनसं निवृत्तं यदाप्यनावाप्यमिहास्ति किंचित्।
यदेव सर्वैर्मुनिभिर्गृहीतं तदेव रूपं परमं भवत्याः॥ १४॥

अनन्तशक्तिप्रभवप्रभावमनन्तसंख्याका पुमर्थमूलम्।
अनन्तकालक्षपणाक्षयं ते विचेष्टितं मे हृदये चकास्तु॥ १५॥

तडिल्लतावच्च सुवर्णवर्णं रामाभ्रसम्पर्कसदामनोज्ञम्।
ध्यातं न यैस्ते जननि स्वरूपं तेषां भवेऽस्मिन् जनुरेव मोघम्॥ १६॥

तावन्मुखे जाड्यमुदेति भूयस्तावद्दरिद्रो भवतीह लोकः।
तवन्न कान्तिप्रसरोऽस्मिन् देहे यावन्न तेऽजायत दृष्टिपातः॥ १७॥

अधिप्रमोदाटविकुञ्ज मध्ये श्रीरामयोगेन सदा स्फुरन्ती ।
इन्दीवरश्यामललोचनां त्वां सम्पत्तिसंवित्तिकृते भजामि ॥ १८ ॥

यद्वाग्भवं नाम निरूढ़वीजं परात्मकं वेदसमूलमूलम् ।
तत्तद्वपुः संनिहितं समस्ततन्त्रैषु मन्त्रात्मतया भजामि ॥ १९ ॥

कदाचिदुन्मीलितमानभावोन्नते भ्रुवौ मन्मथचापचारू ।
श्रीरामचन्द्रैकरसीन्द्रभाव्ये भजामि ते मुक्तकृपाकटाक्षे ॥ २० ॥

वेदान्तवाक्येषु निगूढमुच्चैर्यत्तत्परं ब्रह्म चिदेकमात्रम् ।
तस्यापि चेत्थं परमाप्रतिष्ठा तदा कथं वाग्विषयत्वमेषि ॥ २१ ॥

नित्ये महिम्नि प्रथितप्रतिष्ठा त्वेके महागाथगुणेकजुष्टा ।
अगोचरा ब्रह्मशिवादिभिस्त्वमधिप्रमोदाटवि दृश्यसे वै ॥ २२ ॥

कदापि पञ्चत्वमियाद्विरंचिस्तथा विरामं भजते रमेशः ।
भजाम्यहं चैव विनाशभाव तदा त्वमीशः स्वयमेव चासि ॥ २३ ॥

त्वदङ्घ्रिपङ्केरुहगर्भधूली त्रिवेदमल्लीसुमनोमधूलीम् ।
विचिन्वतां ज्ञानयथेष्वगम्यामधिप्रमोदाटवि किं न लप्स्ये ॥ २४ ॥

वेदान्तविज्ञानविनिश्चितार्थैर्योगेन कष्टेन गृहीतमन्यैः ।
तत्त्वत्स्वरूपं प्रमुदाटवीनामाभीरकन्याभिरहो सुखापम् ॥ २५ ॥

यथाकथंचिद्विषयैर्विमुक्ता नृपां मनोवृत्तिरुदीर्णरूपा ।
त्वामप्रमेयामविलभ्य सीते कदर्थनीया किमु मुक्तिमार्गे ॥ २६ ॥

ये स्वाश्रयां च प्रवदन्ति मुक्तिं तेषामहंभाविनष्टमात्रा।
ब्रह्मास्त्रिरूपाखलु चित्तवृत्तिरत्यर्थमेवप्रविभाति मोघा॥ २७॥

ये त्वत्पदाब्ज प्रभजन्ति सन्तस्तेषां परानुग्रहमात्रवश्या।
स्वं ब्रह्मधर्मं प्रविहाय मातः करोषि साश्चर्यचरित्रचर्याम्॥ २८॥

रजांसि भूमेः प्रमिमातु कश्चित्तथा तरंगान् जलधेर्बिभर्तु।
तथापि मातस्तव दिव्यकेलीगुणान् न संख्यातुमसौ समर्थः॥ २९॥

नमस्त्रिवेदीशिरसि स्थितायै ततोऽपि दौर्लभ्यतमान्वितायै।
स्वभक्तिमात्रैकसुलभात्मने ते श्रीसच्चिदानन्दपदोन्नतायै॥ ३०॥

प्रमोदवनवीथीषु सहजानन्दिनी तु या।
सा त्वं जनकभूपस्य गृहे मातः समागता॥ ३१॥

भक्तानुग्रहकारिण्याः को जानाति तव क्रियाम्।
फलानुमेयमात्रत्वात्तथापि खलु गीयते॥ ३२॥

इत्युच्चार्यं शिवः स्तोत्रं सीतायाः परमश्रियः।
सानन्दाश्रुमिलन्नेत्रं दण्डवन्न्यपतद्भुवि॥ ३३॥

**इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे पश्चिमखण्डे भरतलक्ष्मणीये सीताजन्मस्तुतावेकोनविंशोऽध्यायः॥ १९॥**